# सरस्वतीपूजा

## १. सरस्वतीपूजापद्धतिः

सरस्वतीयन्त्रम्

शुद्धासन उपविश्य आचम्य प्राणानायम्य कर्मपात्रं विधाय देशकालौ संकीर्त्य अमुक गोत्रस्य परिवारान्वितस्य मम ज्ञाताज्ञातपापक्षयपूर्वकं अस्मदादीनां सबालवनितानां विद्यानुरागिणां सर्वेषां बालकानां बालिकानां च श्रीवागीश्वरी-सरस्वतीसुप्रसादसिद्धिद्वारा सर्वविधविद्याप्राप्त्यर्थं ज्ञानविवृद्धयर्थं सरस्वतीपूजनं तदङ्गत्वेन दीपकलश-गणेशादिनां च पूजनं कर्म करिष्ये। इति संकल्प्य दीपादीन् संपूज्य सर्वतो भद्रमण्डलं विलिख्य संपूज्य तदुपरि प्रस्थमितं धान्यं संस्थाप्य कलशं पूजयित्वा स्वर्णादिपात्रं षट्कोणाष्टदलभूपुरात्मकं यन्त्रं सरस्वतीप्रतिमां वा निर्माय अग्न्युत्तारणं कृत्वा ॐ वर्णाब्जपद्मासनाय नमः इति आसनं दत्त्वा पीठमध्ये संस्थाप्य न्यासं कुर्यात्। तद्यथा–

ॐ आँ अङ्गुष्ठाभ्यां नमः। ॐ आँ तर्जनीभ्यां नमः। ॐ आँ मध्यमाभ्यां नमः। ॐ आँ अनामिकाभ्यां नमः। ॐ आँ कनिष्ठिकाभ्यां नमः। ॐ आँ करतलकरपृष्ठाभ्यां नमः। इति करन्यासः।

ॐ आँ हृदयाय नमः। ॐ आँ शिरसे स्वाहा। ॐ आँ शिखायै वषट्। ॐ आँ कवचाय हुम्। ॐ आँ नेत्रत्रयाय वौषट्। ॐ आँ अस्त्राय फट्। इति हृदयादि षडङ्गन्यासः। ॐ आँ भ्रुवोः। ॐ आँ नाभौ। ॐ आँ गुह्ये। ॐ आँ बस्तौ। इति विन्यसेत्। एवं न्यासविधिं कृत्वा ध्यायेत्।

**ध्यानम्**

रत्नकान्तिनिभां देवीं ज्योत्स्नाजालविकाशिनीम् ।
मुक्ताहारयुतां शुभ्रां शशिखण्डविभूषिताम् ॥ १ ॥
बिभ्रतीं दशहस्तैश्च व्याख्यां वर्णस्य मालिकाम् ॥
अमृतेन तथा पूर्णं घटं च दिव्यपुस्तकम् ॥ २ ॥
दधतीं वामहस्तेन पीनस्तनभरान्विताम् ॥
मध्ये क्षीणां तथा स्वच्छां नानारत्नविभूषिताम् ॥ ३ ॥

एवं ध्यात्वा-

**सर्वतोभद्रमण्डलपूजा, पीठदेवतापूजा च**

सर्वतोभद्रमण्डलं संपूज्य तत्रैव मण्डूकादि पीठदेवताः पूजयेत्-
ॐ मं मण्डुकाय नमः। ॐ कालाग्निरुद्राय नमः। ॐ मूलप्रकृत्यै नमः। ॐ आधारशक्तये नमः। ॐ कूर्माय नमः। ॐ अनन्ताय नमः। ॐ वराहाय नमः। ॐ पृथिव्यै नमः। ॐ सुधासमुद्राय नमः। ॐ रत्नद्वीपाय नमः। ॐ सुवर्णद्वीपाय नमः। ॐ नन्दनोद्यानाय नमः। ॐ मणिमण्डपाय नमः। ॐ सुवर्णमण्डपाय नमः। ॐ सुवर्णवेदिकायै नमः। ॐ रत्नसिंहासनाय नमः। ॐ धर्माय नमः। ॐ ज्ञानाय नमः। ॐ वैराग्याय नमः। ॐ ऐश्वर्याय नमः। इति।

ततः पूर्वादिदिक्षु-
ॐ अधर्माय नमः। ॐ अज्ञानाय नमः। ॐ अवैराग्याय नमः। ॐ अनैश्वर्याय नमः। ॐ अनन्ताय नमः। ॐ पद्माय नमः। ॐ अँ अर्कमण्डलाय नमः। ॐ उँ सोममण्डलाय नमः। ॐ मँ वह्निमण्डालाय नमः। ॐ सं सत्त्वाय नमः। ॐ रँ रजसे नमः। ॐ तं तमसे नमः। ॐ आं आत्मने नमः। ॐ अं अन्तरात्मने नमः। ॐ पं परमात्मने नमः। ॐ ह्रीं ज्ञानात्मने नमः। ॐ मायातत्त्वाय नमः। ॐ कालतत्त्वाय नमः। ॐ विद्यातत्त्वाय नमः। ॐ परतत्त्वाय नमः। इति पीठदेवताः सम्पूज्य नवपीठशक्तीः पूजयेत्।

तत्र पूर्वादिक्रमेण- ॐ मेधायै नमः। ॐ प्रज्ञायै नमः। ॐ प्रभायै नमः। ॐ विद्यायै नमः। ॐ ज्ञानायै नमः। ॐ धृत्यै नमः। ॐ स्मृत्यै नमः। ॐ बुद्ध्यै नमः। मध्ये- ॐ विद्येश्वर्यै नमः। इति पीठशक्तीः पूजयेत्।

ततः प्राणप्रतिष्ठां विधाय पुनर्ध्यात्वा मूलेन (ॐ ह्रीं) आवाहनादि पुष्पान्तैरुपचारैः संपूज्य देव्याज्ञां गृहीत्वा आवरणपूजां कुर्यात्। तत्रक्रमः-

## आवरणपूजा

षट्कोणकेसरेषु, अग्निकोणे- ॐ आँ हृदयाय नमः। निर्ऋतिकोणे- ॐ आँ शिरसे स्वाहा। वायव्यकोणे- ॐ आँ शिखायै वषट्। ऐशान्ये- ॐ आँ कवचाय हुम्। पूज्यपूजकयोर्मध्ये- ॐ आँ नेत्रत्रायाय वौषट्। देवीपश्चिमे- ॐ आँ अस्त्राय फट्। इति षडङ्गानि पूजयेत्।

ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य-
ॐ अभीष्ठसिद्धिं मे देहि शरणागतवत्सले॥
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम्॥
इति पठित्वा पुष्पाञ्जलिं दत्त्वा विद्याधिष्ठातृदेवताः साङ्गाः सपरिवाराः सम्पूजितास्तर्पिताः सन्तु इति वदेत्। इति प्रथमावरणम्।

ततोऽष्टदले पूज्यपूजकयोर्मध्ये प्राचीतदनुसारेण अन्याः दिशः प्रकल्प्य पूर्वादिक्रमेण - ॐ भोगायै नमः, ॐ सत्यायै नमः। ॐ विमलायै नमः। ॐ ज्ञानायै नमः। ॐ बुद्ध्यै नमः। ॐ स्मृत्यै नमः। ॐ मेधायै नमः। ॐ प्रज्ञायै नमः। इत्यष्टौ शक्तिः पूजयित्वा ततः पुष्पाञ्जलिमादाय मूलमुच्चार्य-
ॐ अभीष्ठसिद्धिं मे देहि शरणागतवत्सले॥
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम्॥
इति पठित्वा पुष्पाञ्जलिं दत्त्वा विद्याधिष्ठातृदेवताः साङ्गाः सपरिवाराः सम्पूजितास्तर्पिताः सन्तु इति वदेत्। इति द्वितीयावरणार्चनम्।

ततोऽष्टदलाग्रेषु पूज्यपूजकयोर्मध्ये प्राची तदनुसारेण अन्याः दिशः प्रकल्प्य प्राचीक्रमेण वामावर्तेन च- ॐ ब्राह्म्यै नमः। ॐ महेश्वर्यै नमः। ॐ कौमार्यै नमः। ॐ वैष्णव्यै नमः। ॐ वाराह्यै नमः। ॐ इन्द्राण्यै नमः। ॐ चामुण्डायै नमः। ॐ महालक्ष्म्यै नमः। इत्यष्टौ मातृकाः पूजयित्वा पुष्पाञ्जलिमादाय मूलमुच्चार्य-
ॐ अभीष्ठसिद्धिं मे देहि शरणागतवत्सले॥
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम्॥

इति पठित्वा पुष्पाञ्जलिं दत्त्वा विद्याधिष्ठातृदेवताः साङ्गाः सपरिवाराः सम्पूजितास्तर्पिताः सन्तु इति वदेत्। इति तृतीयावरणार्चनम्।

ततो भूपुरे पूर्वादि क्रमेण - ॐ लं इन्द्राय नमः। ॐ रं अग्नये नमः। ॐ मं यमाय नमः। ॐ क्षं निर्ऋतये नमः। ॐ वं वरुणाय नमः। ॐ यं वायवे नमः। ॐ कुं कुबेराय नमः। ॐ हं ईशानाय नमः। ईशान पूर्वयोर्मध्ये ॐ आं ब्रह्मणे नमः। निर्ऋतिपश्चिमयोर्मध्ये ॐ ह्रीं अनन्ताय नमः। इति दशदिक्पालान् पूजयित्वा पुष्पाञ्जलिमादाय मूलमुच्चार्य-

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले॥
भक्त्या समर्पये तुभ्यं चतुर्थावरणार्चनम्॥

इति पठित्वा पुष्पाञ्जलिं दत्त्वा विद्याधिष्ठातृदेवताः साङ्गाः सपरिवाराः सम्पूजितास्तर्पिताः सन्तु इति वदेत्। इति चतुर्थावरणार्चनम्।

ततो भूपुरे इन्द्रादिसमीपे – ॐ वं वज्राय नमः। ॐ शं शक्तये नमः। ॐ दं दण्डाय नमः। ॐ खं खड्गाय नमः। ॐ पां पाशाय नमः। ॐ अं अङ्कुशाय नमः। ॐ गं गदायै नमः। ॐ त्रिं त्रिशूलाय नमः। ॐ पं पद्माय नमः। ॐ चं चक्राय नमः। इति वज्राद्यायुधानि पूजयित्वा पुष्पाञ्जलिमादाय मूलमुच्चार्य-

ॐ अभीष्टसिद्धिं मे देहि शरणागतवत्सले॥
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम्॥

इति पठित्वा पुष्पाञ्जलिं दत्त्वा विद्याधिष्ठातृदेवताः साङ्गाः सपरिवाराः सम्पूजितास्तर्पिताः सन्तु इति वदेत्। इति पञ्चमावरणार्चनम्।
इत्यावरणपूजां कृत्वा धूपादिनमस्कारान्तं सम्पूज्य स्तोत्रेण स्तुत्वा जपं कुर्यात्। इति सरस्वतीमन्त्रपूजनम्।

## सरस्वतीस्तोत्रम्

ॐ अस्य श्री वाग्वादिनी शारदामन्त्रस्य मार्कण्डेयाश्वलायन ऋषिः स्रग्धरानुष्टुभौ छन्दसी श्रीसरस्वतीदेवता श्रीसरस्वतीप्रसादसिध्यर्थे जपे विनियोगः।

### ध्यानम्

ॐ शुक्लां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं
वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्।

हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां
वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥

*ब्रह्मोवाच-*

ह्रीं ह्रीं हृद्यैकबीजे शशिरुचिकमले कल्पविस्पष्टशोभे
भव्ये भव्यानुकूले कुमतिवनदहे विश्ववन्द्याङ्घ्रिपद्मे ।
पद्मे पद्मोपविष्टे प्रणतजनमनो मोदसंपादयित्री
प्रोत्फुल्लज्ञानकूटे हरिजनदयिते देवि संसारसारे ॥१॥

ऐं ऐं ऐं इष्टमन्त्रे कमलभवमुखाम्भोजरूपे स्वरूपे
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।
न स्थूले नैव सूक्ष्मेऽप्यविदितविभवे नापि विज्ञानतत्त्वे
विश्वे विश्वान्तराले सुरवरनमिते निष्कले नित्यशुद्धे ॥२॥

ह्रीं ह्रीं ह्रीं जापतुष्टे हिमरुचिमुकुटे वल्लकीव्यग्रहस्ते
मातर्मातर्नमस्ते दह दह जडतां देहि बुद्धिं प्रशस्ताम् ।
विद्ये वेदान्तगीते श्रुतिपरिपठिते मोक्षदे मुक्तिमार्गे
मार्गातीतप्रभावे भव मम वरदा शारदे शुभ्रहारे ॥३॥

धीं धीं धीं धारणाख्ये धृतिमतिनुतिभिर्नामभिःकीर्तनीये
नित्येऽनित्ये निमित्ते मुनिगणनमिते नूतने वै पुराणे ।

पुण्येऽपुण्यप्रभावे हरिहरनमिते पुण्यतत्त्वे सुवर्णे
मन्त्रे मन्त्रार्थतत्त्वे मतिर्मतिमतिदे माधवप्रीतिनादे ॥४॥

ह्रीं क्षीं धीं ह्रीं स्वरूपे दह दह दुरितं पुस्तकव्यग्रहस्ते
सन्तुष्टाकारचित्ते स्मितमुखिसुभगे जंभनिःस्तंभविद्ये ।
मोहे मुग्धप्रबोधे मम कुरु कुमतिध्वान्तविध्वंसनित्ये
गीर्वाग्गौर्भारती त्वं कविवृषरसना सिद्धिदे सिद्धिसाध्ये ॥५॥

सौं सौं सौं शक्तिबीजे कमलभवमुखाम्भोजभूतस्वरूपे
रूपारूपप्रकाशे सकलगुणमये निर्गुणे निर्विकारे ।
न स्थूले नैवसूक्ष्मेऽप्यविदितविभवे जाप्यविज्ञानतत्त्वे
विश्वे विश्वान्तराले सुरगणनमिते निष्कले नित्यशुद्धे ॥६॥

स्तौमि त्वां त्वां च वन्दे भज मम रसनां मा कदाचित्त्यजेथाः
मा मे बुद्धिर्विरुद्धा भजतु न च मनो देवि मे जातु पापम् ।
मा मे दुःखं कदाचिद्विपदि च विषये मास्तु मे चाकुलत्वं
शास्त्रे वादे कवित्वे प्रसरतु मम धीर्मास्तु कुण्ठा कदाचित् ॥७॥

इत्येतैः श्लोकमुख्यैः प्रतिदिनमुषसि स्तौति यो भक्तिनम्रो
देवीं वाचस्पतेरप्यतिमति विभवो वाक्पटुर्नष्टपङ्कः ।
सस्यादिष्टार्थलाभः सुतमिव सततं पाति तं सा च देवी
सौभाग्यं तस्य लोके प्रसरति कविता विघ्नमस्तं प्रयाति ॥८॥

ब्रह्मचारी व्रती मौनी त्रयोदश्यां निरामिषः ।
सरस्वतीस्तोत्रपाठात्स स्यादिष्टार्थलाभवान् ॥९॥

पक्षद्वयेऽपि यो भक्त्या त्रयोदश्येकविंशतिम् ।
अविच्छेदं पठेद्धीमान्ध्यात्वा देवीं सरस्वतीम् ॥१०॥

शुक्लाम्बरधरां देवीं शुक्लाभरणभूषिताम् ।
वाञ्छितं फलमाप्नोति स लोके नात्र संशयः ॥११॥

इति ब्रह्मा स्वयं प्राह सरस्वत्याः स्तवं शुभम् ।
प्रयत्नेन पठेन्नित्यं सोऽमृतत्वं प्रगच्छति ॥१२॥

। इति ब्रह्मपुराणोक्तं सरस्वतीस्तोत्रम् ।